अजातमुत्पन्नं यथा मृदः सकाशादुत्पन्नो घटः स्वोपादानं मृदमत्यक्त्वा जीवति प्रलीयमानोऽपि मृद्येव प्रलीयत एवं ब्रह्मणः सकाशाज्जातं जगदपि ब्रह्मात्यक्त्वा जीवति प्रलीयमानं च ब्रह्मण्येव प्रलीयत इत्युक्त्वोत्तरशास्त्रसंदर्भेण ब्रह्मणि समन्वयादिकं प्रतिपाद्य ब्रह्मार्पणबुद्ध्यैव कर्माणि कर्तव्यानीत्युक्तम्। तत्रश्च श्रीपरमेश्वरप्रीत्यर्थं ज्योतिष्टोमेन यक्ष्य इत्यादिस्वाभीष्टसदाशिवगजानननारायणाद्युपाध्यवच्छिन्नपरमेश्वरप्रीत्युद्देशेन संकल्पः कार्यः। यद्यपि संकल्पः कर्म मानसमित्युक्तं तथाऽपि श्रौतकर्मसु वाचिकोऽपि। यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेतेति श्रुतावुक्तत्वेत्युक्तेः। अत्र जलहस्तत्वाद्याचारात्। परिशिष्टे—

> यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत्।
> विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्॥ इति।

शाखान्तरोपसंहारे यथोपदेशं कुरुत इति वैश्वदेवसूत्रमपि प्रमाणम्। वैश्वदेव एव यथोपदेशकरणनियमादन्यत्रैवोपसंहारो न वैश्वदेवे। स च पाक्षिक एव। स च सूत्राविरोधेन। यत्र शाखान्तरीयपक्षस्य कण्ठोक्त्या निषेध एवशब्दश्रवणं वा तत्र तु नैवोपसंहारः। पारक्यमविरोधि यदित्यनन्तरोदाहृतपरिशिष्टवचनात्। न च शाखान्तरोक्तप्रधानाङ्गानां स्वशाखात आधिक्ये तस्याप्युपसंहारः पक्षे स्यादिति वाच्यम्।

> बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रचोदितम्।
> तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत्॥

इति वचनेन तन्निरासात्। गृह्यग्रहणस्य श्रौतकर्मोपलक्षणार्थत्वात्। न चैवं कस्याप्युपसंहारो माऽस्त्विति वाच्यम्। यथोपदेशं कुरुत इत्यनेन शाखान्तरीयोपसंहारस्य वैश्वदेवातिरिक्तस्थले प्रवृत्तेरुक्तत्वात्। तत्रेयं व्यवस्था। यत्र स्वशाखे सामान्यत उक्तं तद्विषये शाखान्तरे स्वसूत्राविरुद्धं प्रकृतोपयोगि किंचिदधिकमुक्तं चेत्तावन्मात्रं ग्राह्यमेव। यथा सामान्यतो दर्भैरग्निं परिस्तृणातीत्युक्ते दर्भसंख्याविशेषस्वीकारः। स्वशाखापेक्षया शाखान्तरे विशेषो विकृतौ यः सोऽपि स्वीकार्य एव। यथा दीक्षणीयेष्ट्यादौ प्रधानस्वरविशेषः। अयं चापरो विशेषः। स्वशाखोक्तेषु शाखान्तरोक्तोपसंहारपक्षे तदुक्तेषु च पक्षेषु मध्ये यो हौत्रशास्त्रैक-

वाक्यतापन्नं औद्गात्रशाखैकवाक्यतापन्नो वा तत्तद्विषये भवति स एव ग्राह्य इति सर्वं रमणीयम् । बृहन्नारदीये—

विष्णवर्पितानि कर्माणि सकलानि भवन्ति हि ।
अनर्पितानि कर्माणि भस्मनि न्यस्तहव्यवत् ॥
नित्यं नैमित्तिकं काम्यं यच्चान्यन्मोक्षसाधनम् ।
अर्पितं विष्णवे सर्वं सात्त्विकं सफलं भवेत् ॥ इति ।

विष्णुस्मरणात्सर्वं पूर्णं भवति । तथा च स्मृतिः—

प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ इति ।

अनाज्ञातादिमन्त्रत्रयजपवैष्णव्यृग्जपव्याहृतिजपाः सर्वसंधानार्थं वक्तव्याः । तथा च स्मृत्यन्तरे—

अनाज्ञातादित्रितयं वैष्णवीमृचमेव च ।
समस्तव्याहृतीश्चैव जपेद्यज्ञस्य पूर्तये ॥ इति ।

सर्वयाज्ञिकोपयोगायायमुपोद्धात उक्तः । अयं दर्शपूर्णमासाद्यर्थोऽपि भवति । न तु केवलं सोमार्थ एवेति द्रष्टव्यमिति दिक् ।

इति श्रीमद्दोकोपाह्वश्रीगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचिष्यमाणसूत्रव्याख्यानोपयोगिसर्वशेषभूतोपोद्धातः समाप्तः ।

